# अथ वाचस्पतीय-गयाश्राद्धपद्धतिः ।

मङ्गलाचरण, श्राद्धकाल, त्रिपिण्डी, मातृषोडशीभिर्भूषिता ।

इस पुस्तक के छपवाने तथा परिवर्तन आदि करने का अधिकार प्रकाशक ने स्वाधीन रक्खा है इसलिये इस को प्रकाशक के आज्ञा बिना कोई न छापै ॥

श्रीगणेशाय नमः। श्रीरामकृष्णाभ्यां नमोनमः। अथ मंगलाचरणम्॥ शिवतनयवरिष्ठं सर्वकल्याणमूर्तिं परशुकमल हस्तं शोभितं मोदकेन॥ अरुणकुसुममालाव्यालवद्धोदरेण मम हृदयनिवासं श्रीगणेशं नमामि॥ १॥ अथ श्राद्धकालमाह॥ पूर्वाण्हे दैवकं श्राद्धमपराण्हे तु पार्वणम्॥ एकोद्दिष्टं तु मध्यान्हे प्रातर्वृद्धिनिमित्तकम्॥ १॥ शुक्लपक्षस्य पूर्वाण्हे श्राद्धं कुर्याद्विचक्षणः॥ कृष्णपक्षेऽप-

॥१॥ राग्हे च रौहिगां नतु लंघयेत् ॥ २ ॥ अत्र विशेषवा 
क्यादेकोद्दिष्टस्याष्टमनवममुहूर्त्तयोस्तथा पार्वणस्यैकादश
द्वादशमुहूर्त्तयोरेव मुख्यकालत्वं न मुहूर्त्तत्रयस्य इति॥
अथात्रैव गया श्राद्धकालमाह ॥ वायुपुराणे ॥ मीने मेषे
स्थिते सूर्ये कन्यायां कार्मुके घटे ॥ दुर्लभं त्रिषु लोकेषु
गयायां पिंडपातनम् ॥ ३ ॥ मकरे वर्त्तमाने च ग्रहणे
चन्द्रसूर्ययोः ॥ दुर्लभं त्रिषु लोकेषु गयायां पिंडपातनम् ॥१॥

॥ ४ ॥ गयायां सर्वकालेषु पिंडं दद्याद्विचक्षणः ॥ अधि
मासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥ ५ ॥ नत्यक्तव्यं
गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ गयाश्राद्धं प्रकुर्वीत
संक्रांत्यादौ विशेषतः ॥ ६ ॥ काले वा परपक्षे वा चतु-
र्थ्यादितिथिष्वपि इति ॥ अपरपक्षे कृष्णपक्षे इत्यर्थः
इति वायुपुराणे ॥ अथात्र तीर्थश्राद्धविधौ विहितकर्माह ॥
पितृभक्तौ स्मृत्यंतरेऽपि ॥ आसनं पिंडदानं च पुनः प्र-

त्यवनेजनम् ॥ दन्तिणाचान्नसंकल्पस्तीर्थश्राद्धेष्वयं वि-
धिः ॥ ७ ॥ अर्घमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ॥
तृप्तिप्रश्नं च विकरं तीर्थश्राद्धे विवर्जनम् ॥ ८ ॥ अथ
त्तयमाहाऽपरिज्ञाते सांवत्सरैकश्राद्धकाले ॥ तत्रहेमाद्रौ वृ-
हस्पतिः ॥ नज्ञायतेमृताहश्चेत्प्रमीते प्रोषिते सति ॥
मासश्चेत्प्रतिविज्ञातस्तद्दर्शेस्यान्मृतेहनिइति ॥ अन्यच्च
मरीचिः ॥ श्राद्धविघ्ने समुत्पन्ने अविज्ञातेमृतेऽहनि ॥ ए-

कादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥

इतिश्राद्धकाल समाप्तिः ॥

श्रीगणेशायनमः । तीर्थे गत्वा सुस्नानादिकं विधाय देशकालौ संकीर्त्य त्रिपिंडीश्राद्धाधिकारार्थं विष्णुब्रह्मरुद्र-शर्म्मणां सात्विकराजसतामसानां पितृवंशेत्यादिपुराण श्लोकेषु जीवानामण्डजोद्भिज्जगतानां वृक्षतृणगुल्मलता-दीनां महानरकस्थानेषु मज्जमानानां ममारोग्यार्थं

गया सर्वदुरितोपशमनार्थं उत्पन्नउत्पद्यमानज्वरादिसर्वरो- प०
॥३॥ गदोषभयक्लेशसंसृतिविच्छेदादिनिवृत्यर्थं महाआध्या-
त्मिकआधिभौतिकआधिदैविकात्रिविधतापोपशमनार्थं अ
ज्ञातनामगोत्रस्याप्रकृतसंस्कारस्य ममोपद्रवकारिणः शा
श्वतमुक्तये मम गृहे शरीरे वा असंस्कृतेभ्यः आनिर्दिष्ट-
सापेक्षकेभ्योऽव्याधिभयानिवृत्यर्थं आत्मनः कायिकवाचि
कमानासिकसांसर्गिकज्ञाताज्ञातसकलपापक्षयार्थं मम कु ॥३॥

ले अनिर्दिष्टसापेक्तकस्य अज्ञातनामगोत्रस्य सद्गतिवि-
ष्णुलोकफलप्राप्त्यर्थं अस्मिन्विमलतीर्थे त्रिपिण्डीश्राद्धमहं
करिष्ये इति संकल्पः ॥ पुनः, ममारोग्यार्थं सकलदुरितोप-
शान्त्यर्थं उत्पन्नउत्पद्यमानज्वरादिसकलरोगदोषक्लेश-
भयशमनार्थं कलशस्थापनमहं करिष्ये॥ कलशस्य मुखे
विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तस्य स्थितो ब्रह्मा
मध्ये मातृगणाः स्मृताः १ कुक्षौ तु सागराः सप्त सप्त-

 द्वीपा वसुंधरा ॥ अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ॥ 
 २ ॥ कावेरी कृष्णावेणी च गङ्गा चैव महानदी ॥ क्षिप्रा वेत्र-
वती पूर्णा चर्मण्वतिसुवोदिका ३ तापी गोदावरी चैव
नर्मदा च महातपा ॥ द्वारावती पयोदा च सरयू गंडिकी
तथा ४ सहिरण्यं सवस्त्रं च सर्वौषधिसमन्वितम् ॥ सफलं
ध्वजयासार्द्धं कलशत्रितयं स्मृतम् ५ आदौ पूर्वाभिमुखं
विष्णुपूजनम्॥अपसव्यम्,तिलान्गृहीत्वा,विष्णुशर्मणोसा- 

त्विक रूपाय पादार्घपूजनं, राजसरूपिणो ब्रह्मशर्मणो पादार्घ
पूजनं, तामसरूपिणो रुद्रशर्मणो पादार्घपूजनं ॥ सव्यं, आ-
चमनं, अञ्जलिंवद्ध्वा ॥ हरायैनमः, गयानमः, गदाधराय
नमः ॥ पंचक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ यत्र तत्र
स्मरिष्यामिपितॄणां दत्तमक्षयम् ॥ १ ॥ पूर्वेनारायणोदेवो
दक्षिणेमधुसूदनः । पश्चिमे वामनोदेवो उत्तरे च गदाधरः
॥२॥ ऊर्ध्वेतु पुंडरीकाक्ष अधस्ताद्विष्णुदेवताः ॥ सर्वतश्चा

गया ॥५॥ धिपोदेवो यमोरक्षा करोतु मे ॥ ४ ॥ पुनः कर्म पात्रादि-
कर्त्तव्ये पात्रे आसनं आसने पात्रं पात्रे जलं जले य-
वतुलसीचंदनप्रक्षेपः, कुशेनालोडय इमंमंत्रं पठेत् ॥ वरोव-
रेण्योवरदोवाराहोधरणीधरः ॥ आयातु यज्ञे ऽस्मिन् कुर्य्या
त् सर्वदिक्षु भयापहम् ॥ १ ॥ ततः प्रार्थना ॥ त्रिपिंडी श्राद्धो
पहाराणां पवित्रताऽस्तु ॥ सव्येन पुनः, प्रोक्ष्य ॥ पाकः पूतो
भवतु, देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु, अद्येत्यादि ॥५॥

मासे पक्षे तिथौ वासरे ममगृहे कुटुंबादिसभार्याणां अ-
ज्ञातनामगोत्राणां अनिर्दिष्टसापेक्षकानां प्रेतत्वोत्तारणार्थं
असद्गतिविनाशार्थं सद्गतिविष्णुलोकफलप्राप्त्यर्थं अस्मि-
न्तीर्थे त्रिपिंडीश्राद्धमहं करिष्ये॥ पुनः आसनं कुशस्य॥
विष्णुरूपिणे ब्रह्मणे रुद्राय इदमासनं हस्तप्रक्षालनं सर्व
त्र उपग्रहविष्टरार्थंनियमे कुशाः, अपसव्यं, सात्विकरूपिणे
विष्णुशर्मणे इदमासनं हस्तप्रक्षालनं, राजसरूपिणे ब्रह्म-

गो इदमासनं हस्तप्र० तामसरूपिणे रुद्राय इदमासनं ह-
स्तप्र० सव्यं तंदुलात्ततमिश्रितान् यवान् गृहीत्वा अतिथे
विष्णवे भगवते लक्ष्मीकान्ताय द्वारकाधीशाय इहागच्छ
इह तिष्ठ निहितोभव मम पूजां गृहाण यावत्पूजां करो-
मि तावदत्राधिष्ठानं कुरु, अपसव्यं, विष्णुशर्मन् सात्विक-
रूपाय आवाहयिष्ये आवाह्य ब्रह्मशर्मन् राजसरूपाय
आवाहयिष्ये आवाह्य रुद्रशर्मन् तामसरूपाय आवाह- ॥६॥

यिष्ये, आवाह्य, सव्यं, पूजादौमाल्यादिनिवेदनं कृत्वा, पूजान्ते प्रार्थना ॥ समस्तसंपत्समवाप्तिहेतवः समुत्थिता यत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांशवः १ [ सूर्योज्योतिःपुष्पंदीपकोज्योतिःपुष्पं]भोजनोपहारैः प्रशस्तं तदभावे सत्वराजसतामसानां यवतंडुलतिलचूर्णेन पिंडान् कृत्वा पृथक्पृथक्प्रकल्पयेत्। संकल्पंकुर्य्यात् इदमन्नं यद्दत्तं यच्च दास्यामि तत्सर्वं तृप्ति

पर्यंतं यवचूर्णं विष्णवे सात्विकरूपाय प्रीयतां नमः, इदम
न्नं तण्डुलचूर्णं ब्रह्मणे राजसरूपिणे प्रीयतां नमः, इदमन्न
तिलचूर्णं रुद्ररूपिणे तामसाय प्रीयतां नमः,॥ सव्यं॥ आ-
मान्नाविधेः पूजाविधेः परिपूर्णतां नमः, भूमिशोधनं, रेखा
करणं त्रयः कार्याः, स्वसव्यापसव्येन हस्तेन, गयागंगा
कुरुक्षेत्रंप्रभासंपुष्कराणि च॥ एतानि पुण्यतीर्थानि श्राद्ध
काले भवन्ति च १ अयोध्या मथुरा माया काशी कांची

अवंतिका ॥ पुरी द्वारावती ज्ञेया सप्तैता मोक्षदायिकाः २
यवतिलान्विकीर्य, तुलसीपत्रंक्षिपेत्, अपसव्यं, अवनेजनं
प्रथमं, कव्यवाडोऽनलःसोमो यम श्चैवार्यमा तथा॥अग्निष्वा-
त्तावर्हिषदःसोमपा पितृदेवताः १ आगच्छन्तुमहाभागा पु-
ष्पाभिरक्षितास्त्विह ॥ मदीयाः पितरोये च कुले जाताःसजा
तयः १ तेषां पिंडप्रदानार्थमागतोस्मि तृपिंडिके ॥ ते सर्वे
तृप्तिमायान्तु पिंडदानेन शास्वतीम् २ क्षितितलंप्रक्षेपः, प्र

 

थमं यवपिंडमादाय पितृवंशोत्यादिमंत्रं पठेत्, पितृवंशे मृ-
ता ये च मातृवंशे तथैव च॥ गुरुश्वशुरबंधूनां येचान्ये
बान्धवाः स्मृताः १ ये मे कुले लुप्तपिंडाःपुत्रदारविवर्जिताः
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा २ विरूपा आम
मगर्भाश्च ज्ञाताज्ञाताः कुले मम॥ इदंयवमयं पिंडं मधु-
सर्पिसमन्वितम्॥ ददामि तेभ्यो प्रेतेभ्यो ये पीडां कुर्वते म-
म॥३॥ ये केचित्प्रेतरूपेण वर्तंते पितरो मम॥ यवपिंडप्रदा-

 

नेन तृप्तिं गच्छन्तु तेऽद्यायाम् ४ येकेचिद्दिवि तिष्ठन्ति
प्रेताः सात्विकरूपिणः ॥ सात्विकापिंडप्रदानेन तृप्तिं ग
च्छन्तु शास्वतीम् ५ अज्ञातनामगोत्र अनिर्दिष्टसापेक्षक
विष्णुशर्मन् सात्विकरूपिणो एष ते पिंडं नमः । पिंडे
प्रत्यवनेजनम् ॥ अजातदन्ता ये केचिन्नामगोत्रविवर्जिताः,
तेषामुद्धरणार्थाय इदं पिंडं ददाम्यहम्। द्वितीयं तंडुलपिंडमा
दाय, पितृवंशेत्यादिमंत्रं पठेत् ॥ इमं ब्रीहिमयं पिंडं मधु

रत्त्रयसंयुतम्॥ तन्मुक्तये प्रयच्छामि पीडां येकुर्वंते मम ॥ ये
केचिद्वायुरूपेण वर्तन्ते पितरो मम ॥ तण्डुलपिंडप्रदानेन
व्रजन्तु गतिसत्तमाम्॥ अन्तरिक्षे च ये जाता राजसा वा-
युरूपिणः। राजसपिंडप्रदानेन ते तृप्यन्तु मुदान्विताः४ अज्ञा
तनामगोत्रअनिर्दिष्टसापेक्षक ब्रह्मशर्मन् राजसरूपिणे एष
ते पिंडं नमः ॥ मातामहपक्षे च ये जाता ये यातास्तु
कुले मम। तेषामुद्धरणार्थायइदं पिंडं ददाम्यहम्॥ तृतीयं

तिलपिंडमादाय, पितृवंशेत्यादिपठित्वा॥इमं तिलभवंपिण्डं मधुना सर्पिषा युतम् ॥ तेभ्यो ददामि प्रेतेभ्यो ये पीडां कुर्वते सदा १ ये केचित्तामसाः प्रेता भूमौ तिष्ठन्ति सर्वदा ॥ तिल पिंडप्रदानेन गतिं गच्छंतुतेध्रुवाम् ३ तमोरूपाश्चयेकेचिद्वर्त्त-न्ते पितरोमम ॥ पिण्याकपिंडदानेन ते तृप्यन्तु क्षुधार्दिताः १ अज्ञातनामगोत्रअनिर्दिष्टसापेक्षकरुद्रशर्मन् तामसरूपा-य एष ते पिंडं नमः, अवनेजनंपूर्ववत् ॥ असिपत्रवने घोरे

कुम्भीपाकेचयेगताः॥ तेषामुद्धरणार्थायइदं पिंडंददाम्यहम्।
गया परां आवर्त्य नीवीं विसर्जयन्; इदमन्नसूत्राच्छादनं चन्दनं प०
१० पुष्पधूपदीपफलार्घ्यनैवेद्यताम्बूलयथा कृतां पूजां इदमुचि
तशास्त्रोक्तपुण्यफलप्राप्तये अमुकगोत्रेभ्यः अनादिष्टसापेक्ष
केभ्यो विष्णुब्रह्मरुद्रशर्मभ्यः सात्विकराजसतामसेभ्यो
यथावद्दत्ताविभागेभ्योऽ क्षय्यमस्तु, सव्यं आचमनं, नम-
स्कारः, अद्येत्यादिअपसव्यं, अज्ञातनामगोत्र अनिर्दिष्ट- १०

सापेक्षक पूर्वजस्याश्रयार्थं सपिंडीकरण श्राद्धप्रतिष्ठा
सिध्यर्थं असद्गतिविनाशार्थं सद्गतिं विष्णुलोक फलप्रा
प्त्यर्थं पापघ्नं सव्यं पयोदकामिश्रितेन विष्णुतर्पणमहं क-
रिष्ये ॥ ताम्रपात्रे जलदुग्धयवसर्वौषधीतुलसी चंदनप्रक्षेपः,
विष्णोः पुरा तर्पणं कुर्यात् ॥ विष्णुं तर्पयामि, गोविन्द त० ना
रायणं त० केशवं त० रामचन्द्रं त० दामोदरं त० वासुदेवं त० श्री
धरं त० श्रीपतिं त० गोपीनाथं त० अनादिनिधनं देवं त० माधवं

त० हृषीकेशंत० पद्मनाभंत० पुरुषोत्तमंत० अनिरुद्धं त० सं
कर्षणं त० वासुदेवंत० जनार्दनं त० अच्युतंत० वामनंत० पुं-
डरीकाक्षं त० मधुसूदनं त० अनंतं त० श्रीकृष्णं त० आदिदेव
त० वैकुंठंत० श्रीपतिंत० त्रिविक्रमंत० नारसिंहं त० नाराय
णं त० पीताम्बरं त० असुरांतकंत० चतुर्भुजं त० गोपालंत०
परमेश्वरंत० हिरण्यगर्भं त० जगन्नाथंत० गदाधरंत० गरु-
डवाहनंत० मुकुंदं त० धरणीधरं त० देवकीनंदनं त० अना

दिनिधनो देवः शंखचक्रगदाधरः॥ अक्षयः पुंडरीकाक्षः प्रेत
मोक्षप्रदो भव १ अतसीपुष्पसंकासं पीतवाससमच्युतं ॥ ये
नमस्यन्ति गोविंदं न तेषां विद्यते भयं २ कृष्ण कृष्ण हृषी-
केश गोविंद मधुसूदन ॥ अच्युतानन्त गोविंद माधवोपेन्द्र
केशव ३ त्रिविक्रम गदापाणे शंखपाणे जनार्दन॥ श्रीवत्स-
वक्ष श्रीकान्त पीताम्बर सुरान्तक ४ अप्रमेय हरे विष्णो
कृष्ण दामोदराच्युत ॥ गोविन्दानन्त सर्वेश वासुदेव नमोस्तु

ते ५ कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ॥ ज
लं भित्वा यथापद्मं नरकादुद्धराम्यहं ६ कृष्ण कृष्ण कृपा
लो त्वमगतीनां गतिर्भव ॥ संसारार्णवमग्नानां प्रसीद पर
मेश्वर ७ वासना वासुदेवस्य वासितं भुवनत्रयं ॥ सर्वभूतनि
वासिनं वासुदेव नमोस्तु ते ८ नारायण सुरश्रेष्ठ लक्ष्मी-
कांत जनार्दन ॥ अनेन तर्पणेनाथ प्रेतमोक्षप्रदो भव ९ इति
विष्णुतर्पणसांगतासिद्ध्यर्थं पयस्विनीं धेनुं वा तन्मूल्योपक-

ल्पितं द्रव्यं महाविष्णवे प्रीयतां । अपसव्यं, पुनस्तिलय-
वशंखेन पिंडोपरि तर्पणमहं करिष्ये॥ यः कश्चिद्धनलोभेन
मृतः कालकृतेन च ॥ स मे प्रेतः सुखं दद्यात्तस्मै दुग्धं ति
लोदकं २येन मोहे मृता ये च सर्प्पयोनिव्यवस्थिताः ॥ स
मे प्रेतः सुखं दद्यात्तस्मै दुग्धं तिलोदकं २कपिलाक्षीरपा-
नेन ब्राह्मणी गमनेन च ॥ स मे० ३ शूद्रत्वं येन पापेन
प्रेतत्वंभगवासिने॥समे० ४ अंतरिक्षेच ये जातावायुभूता भू-

मंति च ॥ स मे० ५ प्रकृतिं विकृतिं ये च जायंते भुवि मा-
नवाः ॥ स मे० ६ रुद्रलोकगता ये च पतंगत्वं गताश्च ये ॥
स मे० ७ यातनासु च घोरासु योनिषु विविधासु च ॥ स
मे० ८ नरकेषु च घोरेषु पतंति स्वेन कर्मणा ॥ स मे० ९ दे
वत्त्वं मानुषत्वं च तिर्यक्श्रेणिं पिशाचतां ॥ स मे० १० कृ
मिकीटपतंगाश्च ये वान्ये स्वने कर्मणा ॥ स मे ० ११ श्वा
नशृगालचांडालवायसाः शूकराश्च ये ॥ स मे० १२ वंधुवर्गा-

श्च ये केचिन्नामगोत्रविवर्ज्जिताः ॥ स मे० १३ स्वगोत्रे
परगोत्रे वा जलमेतद्ददाम्यहं ॥ स मे० १४ अपुत्रा अक्रिया
ये च अदारा धर्म्मवर्जिताः स मे० १५ संसाररहिता ये च
रौरवादिषु गामिनः स मे० १६ वृक्षयोनिगता येच तृण
गुल्मलताः स्थिताः ॥स मे० १७लतायोनिं गता येच स्त्रि
यो वा पुरुषोपि वा ॥ स मे० १८कृमिकीटपतंगत्वं ये गता
श्च स्वकर्मभिः ॥ स मे० १९रौरवे नरके याताः कुंभीपाके

च ये गताः। स मे० २० आसुरीयोनिमापन्नाः पिशाचत्वं
गताश्च ये ॥ स मे०२१ गृध्रयोनित्वमापन्नाः सर्पयोनिषु
सयुताः ॥ स मे०२२ शाल्मली नरके याताः कंटकैश्च वि-
दारिताः ॥ स मे० २३मृतिके नरके याता नरकेऽभच्तसंयु
ताः॥समे०२५ सविषे नरके याता दश्युभिर्दशनैः पुनः॥
स मे०॥२७॥ संयुतापन्ननरकं ये सति पापकारिणः स मे०
२८ काकोलूके च नरके चंचुघातेन घातिताः स मे० २६

असिपत्रवने घोर तृषार्ताः पापकर्मिणः ॥ स मे० ३० कुं
भीपाके च नरके पच्यंते तप्ततैलवत् ॥ स मे ३१ तपनं
नाम निरयं तप्तताम्रमयं भृशम् ॥ स मे ०३२ महापातक
जान्घोरान्नरकान्प्राप्य दारुणान् ॥ स मे० ३३ रविमं
डलसंस्था ये वस्त्रादिषु च ये गताः ॥ स मे० ३४ मातृवांध
वा मातुला वा प्रेतरूपे व्यवस्थिताः ॥ स मे० ३५ कर्मच्च
येण ते सर्वे प्राप्नुवंति पयोदकान् ॥ स मे० ३६ मातृपितृ-

गया व्यकन्याश्च मातृपत्नी वधूस्तथा ॥ ताः सर्वाःतृप्तिमायांतु प०
१५ तस्मै दुग्धं तिलोदकं ३७ पितृशिष्याश्च भृत्याश्च प्रेत
रूपे व्यवस्थिताः ॥ स मे० ३८ पुत्रा वा भ्रातरा वापि प्रे
तरूपे व्यवस्थिताः ॥ स मे० ३९ मातुली च स्वपत्नी च
गोत्रिणी चात्मवंचिताः ॥ सर्वास्तास्तृप्तिमायांतु ताभ्यो
दुग्धं तिलोदकं ४० आब्रह्मणा पितृवंशे मातृवंशे व्यव
स्थिताः ॥ स मे० ४१ इषवोनुगताः प्रेता मरुस्थलानिवा १५

सिनः ॥स मे० ४२ ये केचित्प्रेतरूपेण यमेन परिपीडिताः ॥
स मे० ४३ महाप्रेता महाभागा प्रेतपुर्यां च संस्थिताः ॥
स मे० ४४ असंख्याता महाप्रेताःशाखान्यगो घसंस्थिताः ॥
स मे० ४५ प्रेतलोकं गता ये च मुद्गलैर्बहु हन्यते । स
मे०॥४६॥ अगम्यागमने चैवव्रतभंगकराश्च ये॥ स मे० ४७
शृगींदंष्ट्रीघातमृताः सर्पव्याघ्रहताश्च ये ॥ स मे ० ४८
जलाग्निभिर्मृता ये च अघोरा धर्मवर्जिताः ४९ तप्त

तैले च क्षिप्यंते यमलोके महाभये॥ स मे ५० किंकरैः प०
पीड्यन्ते ये तु सुदृढमिक्षुकांडवत् ॥ स मे ५१ जलेन पी
डिताः कंठे यमदूतै र्महानलैः॥ स मे० ५२ यंत्रमध्ये प्रपी
डयन्ते प्रेतरूपेव्यवस्थिताः स मे० ५३ कुष्टापस्मारलूतादि
जलोदरभंगदरैः ॥ स मे० ५४ कंठमालापाराडुरोगैः क्षयी
व्याधिमृताश्च ये ॥ स मे० ५५ कारागृहे मृता ये च ये
च व्याघ्रहता मृताः स मे ० ५६ चांडालैर्निहता मार्गे ऋ-

शौचाशयने मृताः ॥ स मे० ५७ ब्रह्मस्वहारिणो ये तु सु
रापाः स्वर्णहारिणः ॥ स मे० ५८ कुब्जा मूकाश्च वाधिराः
सप्तवंशकुलोद्भवाः ॥ तेषामुदकमायातु अक्षय्य मुपातिष्ठ-
तु ५९ पितृवंशे मृता येच मातृवंशे च ये मृताः ॥ गुरु-
श्वशुरवंधूनां येचान्ये वांधवादयः ६० येमे कुले लुप्तो
दका पुत्रदारविवर्जिताः ॥ क्रियालोपगता ये च ये चान्ये
वांधवास्तथा ६१ विरूपा आमगर्भाश्च ज्ञाताज्ञातकुले

मम ॥ तेषां तोयं मया दत्तं अक्षय्यमुपतिष्ठतां ६२ प्रसी
द देवदेवस्त्वं वासुदेव जगत्पते। अनेन तर्पणेनाथ प्रेतमोक्ष
प्रदोभव ६३ पुनः पिंडत्रयात्मिका पूजा ॥ दक्षिणासंकल्पः।
अपसव्यं॥ कृतैतत्त्रिपिंडीकर्मणः सांगतासिद्ध्यर्थं यथा सं
पन्नेनान्नेन तृप्तिपर्य्यन्तं सदक्षिणां चतुरो ब्राह्मणान्तर्पयि
ष्ये ॥ पुनः कृतैतत्त्रिपिंडीकर्मणः सांगतासिद्ध्यर्थं सात्विका
य वस्त्रं तन्मूल्योपकल्पितं द्रव्यं वा श्रीविष्णोः प्रीयतां

नमः ॥ एवं राजसे कमंडलुं ब्रह्मणे प्रीतयां नमः ॥ तथा ता-
मसेभ्यश्छत्रोपानहौ रुद्राय प्रीयतां नमः॥ तिलान् गृही
त्वा घटोपरि क्षिपेत् ॥ विष्णुब्रह्मरुद्राः सात्विकराजसता म
साः स्वस्थानं गच्छंतु । विष्णुकलशे स्थितं तोयं विष्णवे
प्रतिगृह्यतां ॥ ब्रह्मकलशे स्थितं तोयं ब्रह्मणे प्रतिगृह्यतां ।
रुद्रकलशे स्थितं तोयं रुद्राय प्रतिगृह्यताम् । दर्भशाखां
चालयेत्, सव्येन आशीर्ग्रहणं, अपसव्येन जले प्रक्षेपः, पिं

डस्थाने जलं दद्यात् वा:क३सव्यं पात्रे जलंक्षिप्त्वा, ई-
शान विष्णु कमलासन कार्तिकेय वन्हित्रयार्करजनीश
गणेश्वराणां॥ क्रौंचामरेन्द्रकलशोद्भवकश्यपाना पादान्न
मामि सततं पितृमुक्तिहेतोः ॥ अस्मत्कुले दीर्घायुः वंश
वृद्धि, आचमनं, विष्णुपूजनं, ततः तुलसीपत्रंनारिकेलस
हितं गृहीत्वा । दिव्यंतरिक्षभूमिस्थाः सात्विका राजसा
स्तथा॥ प्रेतांश्च तामसाः ज्ञेयाः शांतिं कुर्वंतु तर्पिताः॥

१० ततो भूयसी दक्षिणा। नानानामगोत्रेभ्यो ब्राह्मणेभ्यो
भूयसीं दक्षिणां दास्ये तेन महाविष्णुः प्रीयतां॥ आवाहनं
न जानामि नजानामि विसर्जनं॥ पूजां चैव न जानामित्वं
गतिः परमेश्वर॥इति त्रिपिण्डीविधिः समाप्ता॥ ततःतीर्थदेव-
तापूजनं;अश्वत्थपूजनं,जलसिञ्चनमन्त्रः,वृक्षराज नमस्तु-
भ्यं सर्वदेवमय प्रभो॥ मम देहस्य सन्तापं हर त्वं वारि-
धारया॥ अथ ब्राह्मणानां भोजनं॥ इति शुभम्॥

श्रीगणेशाय नमः॥ अथ गयापद्धतिः॥ वायव्यगारुत्मतक-
ल्पवृत्तान् दृष्ट्वा विचार्यापि च शास्त्रयुक्त्या॥ तनोति
नत्वाऽऽदिगदाधराय वाचस्पतिः श्रीपितृतीर्थसंस्थाम्॥१॥
तत्र कस्मिंश्चिद्दिने एकभक्तादिकं कृत्वातदुत्तरदिने उपवासं
विधाय तदुत्तरदिने कृतनित्यक्रियो गणेशं ग्रहानिष्टदेवतां
च सम्पूज्य॥ ॐ अद्य गयातीर्थयात्राङ्गभूतपार्वणश्राद्धमहं
करिष्ये इति संकल्प्य, घृतेनाधिकेन श्राद्धं कुर्यात्॥ आभ्युद-

यिकश्राद्धमिति गौडाः ॥ ततो ब्राह्मणं पूजयित्वा, हिरण्या-
दिना परितोषयेत् ॥ अद्यप्रतिपदश्वमेधयज्ञजन्यफलसम-
फलप्राप्तिकामोऽमुकतीर्थयात्रामहं करिष्ये, इति संकल्प्य
मुद्राकुण्डलकंकणकाषायपरिधानरूपं छत्रोपानत्परिधान-
रूपं च कार्पटीवेषं कृत्वा ग्रामं वासावच्छिन्नं प्रदक्षिणी-
कृत्य क्रोशाभ्यन्तरस्थं ग्रामं गत्वा श्राद्धशेषघृतेन पारणं
कुर्यात्, ततो दिनान्तरे कृतनित्यक्रियो गृहीतकार्पटीवेषः

पूर्वाह्णे तीर्थाभिमुखं गच्छेत् यावत्तीर्थप्राप्तिः प्रत्यह-
मेवमेव तीर्थे तीर्थे पितृक्षेत्रान्तरमनुस्मरन् कार्पटीवेषं
विभृयात् तीर्थात्प्रत्यावृत्तः स्वग्रामसमीपे ग्रामान्तरे
तत्प्राप्तिदिने कृतोपवासः तदुत्तरदिने गणेशं गृहानिष्ट
देवतां च सम्पूज्य, ॐ अद्यकृततीर्थयात्रांगंपार्वणश्राद्धमहं
करिष्ये, इति संकल्प्य श्राद्धं विधाय, ब्राह्मणत्रयं सम्पूज्य,
स्वग्राम प्राप्य त प्रदक्षिणीकृत्य स्वगृहं प्रविश्य वेषधा-

रणास्थाने वेषं त्यक्त्वा घृतेन पारणां कुर्यात् इति तत्र
गयाक्षेत्राद्बहिरेव स्नानादिराचान्तः कुशादिकमादाय, अद्य
महाकल्पकृतपापक्षयकामो गयाप्रवेशमहं करिष्ये, इति
संकल्प्य गयायां प्रविशेत्। अथगयाप्राप्तिप्रथमदिनकृत्यम्॥
ॐ अश्वमेधसहस्र जन्यफलविलक्षणफलप्राप्तिकामः फल्गु
तीर्थे स्नानमहं करिष्ये इति संकल्प्य, फल्गुतीर्थे पुण्यजले
करोमि स्नानमादृतः॥ पितृणां विष्णुलोकाय भुक्तिमुक्ति-

प्रासिद्धये॥ १ ।फल्गुतीर्थेस्नायात् तर्पणंतु ॐ अद्यामुकगोत्रो-
स्मात्पिता अमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै
स्वधा पितरं प्रीणयामि, एवं पितामहादितर्पणांतं सर्वाञ्ज
लिषुप्रयोज्यं॥ततो देवार्चनादिकं कृत्वा तीर्थप्राप्तिनिमित्तकं
पार्वणंश्राद्धमहं करिष्ये, इति सङ्कल्प्यार्घावाहनरहितं
पार्वणं कुर्यात् पिण्डदानमात्रं वा ततस्तद्दिन एव महान-
दीपश्चिमकूलसंलग्नां गयोतरस्थां प्रेताशिलां गत्वा मू-

संस्कारं कृत्वा तत्रोपविश्याचातःकृतापसव्योदक्षिणाभि-
मुखो भूत्वा ॐ कव्यवाडोनलस्सोमो यमश्चैवार्यमा तथा ॥
अग्निष्वात्ता वर्हिषदः सोमपाः पितृदेवताः ॥१॥ आगच्छन्तु
महाभागा युष्माभिरक्षिता स्त्विह ॥ मदीयाः पितरो ये
चकुलजाताः मनाभयः॥२॥तेषां पिण्डप्रदानार्थमागतोस्मि
गयामिमां॥ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्॥३॥
इति पठित्वा पितॄन्ध्यात्वा सव्यंकृत्वाचम्य, सन्ध्याव-

न्दनवत् पूरककुम्भकरेचकप्राणायामं च कृत्वा पुन्डरी-
काक्षस्मरणेन श्राद्धीयद्रव्याणि कुशोदकेन प्रोक्ष्य ॐ
अद्यामुकगोत्राणांपितृपितामहप्रपितामहानां अमुकामुका
मुकशर्मणां अमुकगोत्राणां मातृपितामहीप्रपितामहीनां
अमुकामुकामुकदेवीनां अमुकगोत्राणां मातामहप्रमाताम-
हवृद्धप्रमातामहानां अमुकामुकामुकशर्मणां अमुकगोत्राणां
मातामहीप्रमातामहीवृद्धप्रमातामहीनां अमुकामुकामुक-

देवीनां प्रेतत्वविमुक्तिकामः प्रेतशिलायां श्राद्धमहं करिष्ये, इति सङ्कल्प्य षोडशदैवतं श्राद्धं पार्वणोतिकर्त्तव्यताकं कुर्यात् ॥ हेमाद्रिमते मातामह्यादिवर्जं शेषं पूर्ववत् । जयशर्मादिमते प्रकृतमेव पार्वणं किन्तु सपत्नीकत्वेन षण्णामेव देवतात्वमिति सम्प्रदायमते षण्णामेव देवतात्वं नतु स्त्रीणामपि नच सपत्नीकत्वेनापीति ॥ उभयमपि न भद्रं ॥ अन्वष्टकासु वृद्धौ च गयायां च क्षयेहनि ॥

25

मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिना सहेति, वायुपुराण-
विरोधात् ॥ एवं दक्षिणादानान्तं पार्वणं विधाय तद्वेदिदक्षि-
णात उपविश्य कृतापसव्यो दक्षिणाभिमुखः दक्षिणाग्रं
कुशत्रयं धृत्वा कव्यवाडो नल इत्यादि शाश्वतीमित्यन्तं
पूर्वलिखितमन्त्रं पठित्वा तेषु कुशेषु सकृत्तिलोदकाञ्ज-
लिदानरूपमावाहनं कुर्यात् ॥ तत एतानि पाद्यादीनि ॐ
पित्रादिभ्यो नम इत्यनेन क्रमेण पञ्चोपचारेण पित्रादीनि

सम्पूज्य ॐ आब्रह्मस्तम्भपर्यन्तं देवर्षिपितृमानवाः॥ तृप्यन्तु पितरः सर्वेमातृमातामहादयः॥१॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनां॥ आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं, इति पूर्ववत् अञ्जलिदानरूपं मिलितपित्राद्यावाहनं कृत्वा ॐ अद्यामुकगोत्रपितरमुकदेवशर्मन् एष ते पिण्डः स्वधा इति तिलजलमधुदधिमिश्रं पायसाद्यन्यतमपिण्डं पित्रे दद्यात्। एवं पितामहादिभ्योपि यथा-

गया दक्षिणां दद्यात्॥ ततस्तद्दक्षिणात उपविश्य समूलान्दक्षिणा- प०
२४ ग्रान् कुशानास्तीर्य ॐ कव्यवाडोनल इत्यादिशाश्वती-
मित्यन्तं मन्त्रं पूर्ववत् पठित्वा सक्तुतिलोदकाञ्जलिदा-
नरूपं पूर्ववदावाहनं कृत्वा अभ्यर्च्य ॐ आब्रह्मस्तंभ
इत्यादिना सतिलजलाञ्जलिदानरूपमावाहनं कृत्वा ॐ
पितापितामहश्चैव तथैव प्रपितामहः ॥ माता पितामही
चैवतथैव प्रपितामही॥१॥मातामहस्तत्पिता च प्रमातामह- २४

कायदः ॥ तेषां पिन्डो मया दत्तो ऽक्षय्यमुपतिष्ठतामिति पौराणिकमन्त्रमुच्चार्य्य तिलजलघृतदधिमधुयुतं मुष्टि-मितसक्तुकृतं मिलितेभ्यो द्वादशभ्यः एकं पिन्ड दद्यात् । ततःपित्रीषोडशीकर्म। सव्येन ऊनविंशतिदास्यमानपिण्डस्थानानि यथादक्षिणाकृतानि प्रत्येकं यथादक्षिणां पञ्चगव्यै-रालिप्य तेषु दक्षिणाग्रंकुशत्रयं धृत्वा ॐ अस्मत्कुले मृता येच गतिर्येषां न विद्यते ॥ आवाहयिष्ये तान्सर्वा-

27

न्कुशपृष्ठे तिलोदकैः ॥१॥ ॐमातामहकुले येचगतिर्येषां न
विद्यते । आवाहयिष्ये तान्सर्वान्कुशपृष्ठे तिलोदकैः ॥२॥
ॐ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ॥ आवाहयिष्ये
तान्सर्वान्कुशपृष्ठे तिलोदकैः ॥३॥ इति पौराणिकमन्त्रैरा-
स्तीर्य दर्भं तानावाह्य गन्धादिभिरभ्यर्च्य यदि देवतापदे
षोडशी क्रियते तदा तद्देवतामन्त्रेण तामपि सम्पूज्य, ॐ
आब्रह्मस्तम्भपर्यन्तं इत्यादिश्लोकाभ्यां पूर्ववदेकवारं तत्र

तिलोदकाञ्जलिंदत्वा पिण्डान्दद्यात् ॐ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् । १॥ ॐ मातामहकुले ये च गतिर्येषां न विद्यते ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥२॥ ॐ वन्धुवर्गकुले ये च गतिर्येषां न विद्यते॥ तेषामुद्धरणार्थाय इमं पिन्डं ददाम्यहं ॥३॥ ॐ अजातदंता ये केचित् ये च गर्भप्रपीडिताः ॥ तेषामुद्धरणार्थाय इमं पिन्डं ददाम्यहं ॥४॥

28

ॐ अग्निदग्धाश्च ये केचित् नाग्निदग्धास्तथा परे ॥ विद्यु-
च्चौरहता येच तेभ्यः पिण्डं ददाम्यहम् ॥५॥ ॐ दावदाहे
मृता येच सिंहव्याघ्रहताश्च ये ॥ दन्ष्ट्रिभिः शृङ्गिभिर्वापि
तेभ्यः पिण्डं ददाम्यहं ॥६॥ ॐ उद्बन्धनमृता येच
विषशस्त्रहताश्च ये ॥ आत्मनोघातिनो येच तेभ्यः पिण्डं
ददाम्यहम् ॥७॥ ॐ अरण्ये वर्त्मनि वने क्षुधया तृषया
हताः ॥ भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहं ॥८॥

ॐ रौरवे चान्धतामिस्रे कालसूत्रे च ये मृताः ॥ तेषामुद्ध-
रणार्थाय इमं पिण्डं ददाम्यहं ॥८॥ ॐ अनेकयातना-
संस्थाः प्रेतलोकं च ये गताः ॥ तेषामुद्धरणार्थाय इमं पिण्डं
ददाम्यहम् ॥१०॥ ॐ असिपत्रवने घोरे कुंभीपाके च ये
मृताः तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥११॥ ॐ
नरकेषु समस्तेषु यातनासु च ये स्थिताः ॥ तेषामुद्धरणा-
र्थाय इमं पिण्डं ददाम्यहम् ॥१२॥ ॐ पशुयोनिगता ये

गया च पक्षिकीटसरीसृपाः अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं
२७ ददाम्यहम् ॥१३॥ ॐ जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन प०
कर्मणा॥ मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥१४॥
ॐ दिव्यंतरिक्षभूमिष्ठाः पितरो बान्धवादयः ॥ मृता असं-
स्कृता येच तेभ्यः पिण्डं ददाम्यहम् ॥१॥ ॐयेकेचित्प्रेत-
रूपेण वर्तन्ते पितरो मम ॥ते सर्वे तृप्तिमायान्तु पिण्ड-
दानेनसर्वदा ॥१६॥ ॐयेबान्धवाबान्धवायेऽन्यजन्मनि २७

वान्धवाः॥ तेषां पिण्डो मया दत्तोह्यक्षय्यमुपतिष्ठताम्॥१७॥
ॐ पितृवंशेमृता येच मातृवंशे च ये मृताः॥ गुरुश्वशुरवन्धू-
नां येचान्ये वान्धवा मृताः॥१८॥ ॐ ये मे कुले लुप्तपिण्डाः
पुत्रदारविवर्जिताः। क्रियालोपगता ये च जात्यंधाः पङ्गवस्तथा
१९ ॐ विरूपा आमगर्भाश्चज्ञाता ज्ञाताः कुलेमम॥ तेषां
पिंडो मयादत्तोह्यक्षय्यमुपतिष्ठताम्, एतैस्त्रिभिरेकः पिंडः ॐ
आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवामदीयाः॥

कुलद्वये ये मम संगताश्च भृत्यास्तथैवाश्रितसेवकाश्च ॥ १ ॥
ॐ मित्राणि सख्यः पशवश्च वृक्षा स्पृष्टाश्च दृष्टाश्च कृ
तोपकाराः ॥ जन्मांतरे ये मम संगताश्च तेभ्यः स्वधा पिंड
महं ददामि ॥ २ ॥ इति द्वाभ्यामेकपिंडः इति पठित्वापसव्ये
नोनविंशतिपिंडान्दद्यात् । स्त्रीषोडश्यां तु, अस्मत्कुले
मृतायेचेत्याद्यावाहनमंत्रादारभ्य मित्राणिसख्य इति प
र्यन्तं संभवत्स्त्रीलिंगमूहनीयम् । यथा, अस्मत्कुले मृता या

च गतिर्यासा न दीयते ॥ तासामुद्धरणार्थाय इमं पिंड ददा म्यहं, ये इत्यत्र या इति विशेषः, येषामित्यत्र यासामिति विशेषः, तेषामित्यत्र तासामिति विशेषः, तेभ्य इत्यत्र ताभ्य इति विशेषः, आत्मनोघातिन्योयाश्च, या बांधवाबां- धवावा यान्यजन्मनि बाधवा॥ पुत्रभर्तृविवर्जिताः ॥ एवं सर्वत्रोह्यं, अन्यदुष्टषोड़शीवदिति द्रष्टव्यं, तत्सर्वेषु पिंडेषु तिलजलपूर्णपात्रेण प्रदक्षिणं वारत्रयं परिसेचनं कर्तव्यम् ॥तत्र

मंत्रः ये च वो येचस्मांश्चासन् याश्च वो याश्चास्मा पृ०
स्वासंस्तेचावाहयंती ताश्चावाहयंती तृप्यंतु भवंतस्तृ
प्यंतु भवत्य स्तृप्यत गोत्रान्पुत्रानभितर्पयंतीरापो म
धुमतीरिमाः स्वधापितृभ्यो मृतं दुहाना आपोदेवी रभ
यास्तर्पयंतु तृप्यततृप्यततृप्यतेति, ततः प्रणिपत्य पित्राद
यः क्षमध्वमिति तान्विसर्जयेत् ॥ ततः सव्येनाचम्य
ॐ साक्षिणः संतु मे देवा ब्रह्मेशानादयस्तथा मया गयां स २६

मासाद्यपितॄणां निष्कृतिः कृता ॥ आगतोस्मि गयां देव पि
तृकार्ये गदाधर। त्वमेव साक्षी भगवाननृणोहमृणात्रयात्, इति
प्राङ्मुखः पठेत्। एतत्क्रियाकलापाशक्तौ प्रेताशिलायां पिण्ड
दानमपि कर्त्तव्यं ॐ अमुकगोत्राणां पितृपितामहप्रपि-
तामहानां अमुकगोत्राणां मातृपितामहीप्रपितामहीनां
अमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहीनां
अमुकगोत्राणां मातामहीप्रमातामहीवृद्धप्रमातामहीनां

32

गया प्रेतत्वविमुक्तकामः प्रेतशिलायां पिण्डदानमहं करिष्ये, प०
३० इति संकल्प्यापसव्यं कृत्वा, कव्यवाडोनल इत्यारभ्य अ-
नृणोहमृणात्त्रयादित्यन्तं पूर्वलिखितकाण्डं कर्त्तव्यम्।केचित्तु
षट्पुरुषाणामेव प्रेतत्वविमुक्तिकामनया पिण्डदानं कार्य-
मिति वदन्ति, अपसव्यंकृत्वा ॐ कव्यवाडोनलः सोम
इत्यारभ्यानृणोहमृणात्त्रयादित्यन्तं पूर्वलिखितं कुर्यादीति,
एतदन्यतमकरणानन्तरं तु पर्वतादवरुह्य पृथिव्यां प्रभो- ३०

साद्रिसंगतायां महानद्यां रामतीर्थत्वेनप्रसिद्धे प्रभासतीर्थे ह्रदे ॐ अघसाग्रशतजन्मांतरकृतदुष्कृतविजयकामोऽस्मिन्रामतीर्थे स्नानमहं करिष्य इति सङ्कल्प्य स्नानतर्पणे कृत्वा स्नानीयसकलमन्त्रपाठानन्तरं ॥ ॐ जन्मांतरशतं साग्रं यत्कृतं दुष्कृतं मया ॥ तत्सर्वं विलयं यातु रामतीर्थाभिषेचनादिति पठित्वा मज्जेत् ॐ अद्य विष्णुलोकगमनकामो रामतीर्थे श्राद्धं पिण्डदानं वाऽहं

33

करिष्य इति सङ्कल्प्य श्राद्धं पिन्डदानं वा कार्यं एतच्च फलंकर्त्तुनिष्ठं तथैव श्रवणात् ॐ अद्यपित्रादिप्रेतत्वविमुक्तिपूर्वकपितृत्वप्राप्तिकामोरामतीर्थे पितृणां पिण्डदानमहं करिष्य इति सङ्कल्प्य पूर्वोक्तरीत्या पित्रादिद्वादशापिण्डा नन्त्यपिण्डषोडशीपिण्डान्दद्यात् विष्णुलोकफलस्यास्य चोभयस्य करणासामर्थ्ये अन्यतरदेवकार्यं तत ॐ राम राम महाबाहो देवानामभयंकर ॥ त्वां नमस्यामि देवेश

मम नश्यतु पातकं इति पठित्वा, स्वर्गकामो रामं
नमस्कुर्यात् ॐ भास्वमानस्वकर्तृकस्वर्गगमनकामः प्रभा
सेशं नमस्कारमहं करिष्य इति सङ्कल्प्य प्रभासेशं नम-
स्कुर्यात्॥ ततो रामं प्रभासेशं च नमस्कुर्यात् ॐ आप-
स्त्वमासि देवेश ज्योतिषांपतिरेव च॥ पापं नाशय मे देव
मनोवाक्कायकर्मजं इति पठित्वा यमायैष बलिर्नम इति
कुशत्रययवजलेन देवरीत्या भक्तादिरूपं बलिं दद्यात्

प्रभासपर्वतदक्षिणादिगर्वाक्स्थितप्रेतशिलाजघनस्थे नग नाम्नि पर्वते ॐ श्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ॥ ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ॥१॥ इति पठित्वा ॐ यमराजभ्रमराजाभ्यामेषबलिर्नम इति तयोर्मिलितयोरोदनाद्यन्यतमं बलिं दद्यात् एतद्बलिदानं नित्यं अकरणेऽनिष्टश्रवणात् अन्यत्सर्वं काम्यं स्वतंत्रं च तथा च तेषु यावदेव कर्तुमिष्यते तावदेव कर्तव्यं नतु सर्वमित्य

वधेयम् ॥ इति प्रथमादिनकृत्यम् ॥ अथ द्वितीयदिनकृत्यम् ॥ तत्र गयाप्राप्तिदिनोत्तरदिने फल्गुतीर्थादौ यथाविधि स्नात्वा नित्यक्रियां समाप्य प्रेतपर्वतं गयावायव्यादिशि गव्यूत्याधिकदूरस्थं गत्वा तन्मूलसंलग्ने तदीशानकोणस्थे ब्रह्मकुन्डे स्वर्गकामनया स्नात्वा तर्पणं कृत्वा प्रेतपर्वत-मारुह्य पित्रावाहनादिसाक्षिश्रवणपर्यन्तं प्रेतशिलावदेव कर्तव्यं, अयंतु विशेषः ॥ ॐ अद्यपितृणां पुनरावृत्तिराहित

35

ब्रह्मलोकावाप्तिकामः प्रेतपर्वते श्राद्धमह करिष्य इति सङ्कल्प्य, श्राद्धं ब्रह्मवेद्यां कर्तव्यमित्याचारः। ततः साक्षि श्रवणानन्तरं ॐ अद्य पितृगणप्रेतत्वविमुक्तिस्वगतप्रेतत्वा भावकामः प्रेतपर्वते तिलमिश्रसक्तुनिक्षेपमहं करिष्य इति सङ्कल्प्य तिलमिश्रसक्तून् प्रेतपर्वते दक्षिणामुखः क्षिपेत् ॐ ये केचित्प्रेतरूपेण वर्त्तंते पितरो मम ॥ ते सर्वे तृप्ति मायान्तु सक्तुभिस्तिलमिश्रैतरिति ॐ आब्रह्मस्तंभपर्यंतं

यत्किंचित्सचराचरम्, मयादत्तेन तोयेन तृप्तिमायान्तु सर्वशः
इति मन्त्रेण तिलतोयांजालिं तत्र क्षिपेत्, ततो यथाशक्ति
ब्राह्मणाय दक्षिणां दद्यात् ॥ इति प्रेतपर्वताविधिः ॥ अथ
पञ्चतीर्थीकृत्यम् ॥ गयाप्राप्तिदिनतृतीयादिने फल्गुतीर्थ-
स्नानादिदेवतार्चनान्तंकर्मंकृत्वा दर्भपाणिराचम्य वारिणा
शिरोभ्युक्ष्य उत्तरमानसं गत्वा ॐ अद्य पापक्षयकामः
उत्तरमानसे स्नानमहं करिष्य इति संकल्प्य स्नानीयमं

36

गया त्रपाठानन्तरं ॐउत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ॥ प०
सूर्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥ १ ॥ इति पठित्वाम-
३४ ज्जेत्, ततस्तर्पणं, तत्र पित्राद्यञ्जलिषु स्वधोदीरणानन्तरं
पितरं प्रीणयामीति विशेषः, तर्पणशेषे देवविधिना आब्रह्म
स्तंभपर्यन्तं देवर्षिपितृमानवाः ॥ तृप्यंतु पितरः सर्वे मातृ-
मातामहादयः ॥ १ ॥ इति पठित्वा एकांजलिर्देयः, तत ॐ
अद्यामुकगोत्राणां पित्रादीनां शाश्वतब्रह्मप्राप्तिकामोऽत्तय ३४

तृप्तिकामो वा उत्तरमानसे श्राद्धमहं करिष्य इति संकल्प्य, द्वादशदैवतं षट्दैवतं वा श्राद्धं कुर्यात्, पिण्डदानं च, केवलपिण्डदानेतु बन्धुवर्गाणामिति योज्यं, ततस्तद्दक्षि-णादिक्षूपविश्य समूलान्दक्षिणाग्रान्कुशानास्तीर्य ॐ कव्यवाड इत्यादिशाश्वतीमित्यन्तं मन्त्रं पठित्वा सकृत्ति लोदकांजलिदानरूपमावाहनं कृत्वा एतानि पाद्यादीनि पित्रादिभ्यो नमः इति पञ्चोपचारेण सम्पूज्य आब्रम्ह-

स्तंभइत्यादिकं पठित्वा सकृत्तिलोदकांजलिदानरूपमावा-
हनं पुनः कृत्वा ॐ पितापितामहश्चैव इत्यादिमन्त्रेण तिल
घृतदधिमधुजलयुतमुष्टिसक्तुकृतं मिलितेभ्यो द्वादशभ्य-
एकमेव पिण्डं दद्यात् तत उत्तरार्कनमस्कारः ॐ पितृ
सूर्यलोकनयनकामः उत्तरार्कस्य नतिमहं करिष्ये, पूजा
यामप्ययमेवसंकल्पः ॐ नमोभानवे भर्त्रे सोमभौमज्ञरूपि-
णे, जीवभार्गवशनैश्चरराहुकेतुस्वरूपिणे ॥१॥ इति मन्त्रेण

पूजा नतिश्च कार्या, ततो मौनेन दक्षिणमानसंगत्वातत्रा-
दीच्यां ॐ अद्यपितृमुक्तिकामः उदीचीतीर्थे स्नानमहं
करिष्य इति संकल्प्य स्नानतर्पणे कृत्वा पार्वणश्राद्धं विधा
य मध्यम कनखलतीर्थे गत्वा ॐ अद्यपितृमुक्तिकामः
कनखलतीर्थे स्नानमह करिष्य इति स्नानतर्पणे कृत्वा
पितृमुक्तिकामनया श्राद्धं च कृत्वा ॐ अद्यपितृमुक्ति-
कामोदक्षिणमानसे स्नानमह करिष्य इति सङ्कल्प्य ॐ

दक्षिणमानसे स्नानं करोम्यात्मविशुद्धये ॥ सूर्यलोकादिसं
सिद्धिसिद्धये पितृमुक्तये ॥१॥ ब्रम्हहत्यादिपापौघयातनानां
विमुक्तये ॥दिवाकर करोमीहस्नानं दक्षिणमानसे।१। इति प-
ठित्वा मज्जेत् ॥ तत्रतर्पणं कृत्वा, पितृमुक्तिकामनयाश्राद्धं
पिण्डदानं वा कृत्वा ॐ नमामि सूर्य तृप्त्यर्थं पितृणांतारणाय
च ॥ पुत्रपौत्रधनैश्वर्य आयुरारोग्यवृद्धये॥१॥ इति मन्त्रेण द-
क्षिणार्कस्यदर्शनं पूजाचमौनिना कार्यं अतः समौनार्कनाम

ॐ कव्यवाडइत्यादिमन्त्रं ददिरामानसएव पठित्वा ग-
दाधरपूर्वदेशस्थ प्रशस्तफल्गुतीर्थं गच्छेत् ॐ अद्येहदश-
लक्षयज्ञाश्वमेधजन्यफलसमाविलक्षणफलप्राप्तिकामः फल्गु
तीर्थेजिह्वालोलेस्नानमहं करिष्य इति सङ्कल्प्य ॐ फल्गु
तीर्थेपुण्यजले इति मन्त्रं पठित्वा स्नात्वातर्पणं विधा
य पित्रादिमुक्तिकामनया द्वादशवषट्दैवतं श्राद्धं कुर्यात्
ततोमधुश्रवादक्षिणादिगवस्थितं पितामहं ॐ नमः शिवा

गया यदेवायईशानपुरुषाय च ॥ अघोरवामदेवाय सद्योजाताय पृ०
३७ शम्भवे ॥ इति मन्त्रेणाप्रशमेत्पूजयेच्च ॥ ततः पुनः फल्गु
तीर्थमागत्य ॐ अद्यपित्रादिसहितात्मनोवैष्णवपदनयन-
कामः फल्गुतीर्थेस्नात्वागदाधरदर्शनमहं करिष्य इति सवि
धिस्नानं गदाधरदर्शनं च कर्तव्यं गदाधरः प्रतिमारूपः तद-
धिकरणीभूतमुण्डपृष्ठाद्रिरूपश्चेति ॐ नमोवासुदेवाय नमः ३७
सङ्कर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे

इति पठित्वा तं पूजयेत्प्रणामेच्च तत उत्तरमानसं गत्वा
ॐ अद्यापितृब्रह्मलोकगमनकामः पञ्चतीर्थ्यांस्नानमहं
करिष्य इति सङ्कल्प्य उत्तरमानसे उदीच्यांकनखले दक्षि
णमानसे फल्गुतीर्थे यथाक्रमंसविधिप्रत्येकं स्नानतर्पणे
कुर्यात् ततोगदाधरसमीपं गत्वा दुग्धदधिघृतमधुखण्डा-
त्मकेन पञ्चामृतेन अष्टोत्तरशतपलपरिमितेन गदाधरं
स्नापयित्वापुष्पवस्त्रालंकारैरर्च्चयेत् एतेषां कर्मणां मध्ये

40

चरमं पंचामृतस्नानमेवावश्यकं अकरणेनिन्दार्थवादात्
इतराणिकाम्यानिस्वतन्त्राणिचेति यथाशक्ति कार्याणि
इति पंचतीर्थीकृत्यम् । अथ पंचतीर्थीकृत्यापेक्षाया द्वितीय-
दिनकृत्यं तत्र स्नात्वानित्यक्रियां कृत्वा ॐ अद्यापि
तृब्रम्हलोकनयनकामोधर्मारण्यगमनमहंकरिष्य इत्या-
चार प्रमितं संकल्पं कृत्वा मतंगवाप्यां गत्वा ॐ अद्यस-
र्वपापक्षयकामोमतङ्गवाप्यां स्नानमहंकरिष्य इतिसंकल्प्य

स्नानतर्पणो कृत्वा ॥ ॐ अद्यास्मत्पितृतृप्तिप्राप्ति कामो-
मतंगवाप्यां श्राद्धमहंकरिष्य इति संकल्प्यषट्पौरुषं पार्व-
णंकृत्वा तत्र मतंगवाप्यामेवोत्तरादिगवस्थितं मतंगेशं
नत्वा ओं प्रमाणं देवताः सर्वालोकपालाश्च साक्षिणः ।
मयाऽऽगत्य मतंगेस्मिन् पितॄणां निष्कृतिः कृता ॥ १ ॥ इति
पठेत् ॐ पितृतारणकामः कूपयूपयोर्मध्ये श्राद्धमहंकरि
ष्य इति संकल्प्यपार्वणं कुर्यात् कूपश्चायमेतद्वाप्यां

 

आग्नेयकोणेक्षेत्रमध्येऽवटरूपोस्ति तत्तीरेश्राद्धं पिंडदानं पतितस्यापि पतितेनापि कर्त्तव्यं किंतु तत्र गर्भहंतृगुरु-तल्पगइत्ययं निर्देशः कार्यः ततोधर्मं धर्मेश्वरं महादेवा धिंच यथाक्रमं स्वर्गकामोनमेत् ॥ अथ पञ्चतीर्थीदिन तृतीयदिन कृत्यम् ॥ ॐ अद्याश्वमेधबहुसहस्रजन्मफल विलक्षणफलप्राप्तिकामः फल्गुतीर्थेस्नानमहंकरिष्य इति संकल्प्य फल्गुतीर्थे स्नात्वादेवार्चनान्तं कर्म कृत्वा ब्रम्ह

सरोगत्वा ॐ अद्यसर्वपापक्षयकामोस्मिन्ब्रह्मसरसि स्ना.
नमहंकरिष्य इति संकल्प्य ॐ स्नानं करोमितीर्थेस्मि-
न्नृणत्रयविमुक्तये श्राद्धायपिण्डदानायतर्पणायात्मशुद्धये
इति पठित्वास्नानतर्पणे कृत्वा ॐ अद्यपितृब्रह्मलोकग-
मनकामो ब्रह्मकूपयूपयोर्मध्ये श्राद्धमहंकरिष्य इति संक
ल्प्य द्वादशदैवतं नवदैवतं षट्दैवतं वा श्राद्धं कृत्वा तत
उत्तरमानसवदक्षय्यपिंडं दत्वा ॐ अद्यपितृमोक्षका-

मो ब्रह्मकल्पिताम्रसेचनमहंकरिष्ये ॐ आम्र ब्रह्मसरो
द्भूतं सर्वदेवमयं विभुम् ॥ विष्णुरूपं प्रसिंचामि पितॄणां
च विमुक्तये १ इति पठित्वा कुशत्रयेणाचारात् ब्रह्मस-
रोजलेन गोप्रचारसमीपस्थान् ब्रह्मकल्पितानाम्रान् सिं-
चयेत् ॐवाजपेयजन्यफलसमफलप्राप्तिकामोब्रह्मयूपप्र-
दक्षिणामहंकरिष्य इति संकल्प्य तत्कृत्वा ॐ पितृब्रह्म-
पुरनयनकामो ब्रह्मनमस्कारमहंकरिष्ये इति संकल्प्य ॐ

नमोब्रह्मणोज्ञाय जगज्जन्मादिकारिणे। भक्तानां च पितॄणां च तारकाय नमोनमः इतिपठित्वा ब्रम्हसरो वायव्यकोणस्थं ब्रम्हाणं प्रणमेत् ततः यमराजभ्रमराजौनिश्चलार्थं स्थिरीकृतौ॥ ताभ्यां बलिं प्रयच्छामि रक्षेतां पथिसर्वदेति पठित्वा ताभ्यांबलिं दद्यात्॥ ॐ यमायैषबलिर्नमः कुशोदकेन देववत् यमबलिं दद्यात् ततः ॐ वैवस्वत कुलोद्भूतौ द्वौश्यावशवलौशुनौ॥ ताभ्यांबलिं प्रय-

43

च्छामिरक्षेतां पथिसर्वदेतिपठित्वा शुनएषबलिर्नमः इति १०
४१ देववद्दर्भोदकेन बलिंदद्यात् ॐ ऐन्द्रवारुणवायव्याया-
म्यावैनैर्ऋतास्तथा ॥ वायसाः प्रतिगृह्णंतु भूमौपिण्डं
मयोज्झितं इति काकेभ्यएषबलिर्नमः इति काकबलिं
दद्यात् श्लोकेनैवबलिदानं नतु वाक्येनेति कश्चित्
काकबल्यनन्तरं स्नानं कुर्यात् ॥ अथ पञ्चतीर्थीदिनोत्तर
चतुर्थदिनकृत्यम् ॥ तत्र ॐ अद्यदशलक्षाश्वमेधयज्ञजन्यफ- ४१

लविलक्षणफलप्राप्तिकामः फल्गुतीर्थेस्नानमहंकारिष्य इति
संकल्प्य फल्गुतीर्थे पुण्यजल इति मंत्रं पठित्वा तत्रस्नायात्
तर्पणमुक्तरीत्यैव कुर्यात् ततः पदेषु श्राद्धं प्रथमं रुद्रपद
समीपं गत्वा ॐ अद्याऽपुनरावृत्तिकामो रुद्रपदस्पर्शन
महंकरिष्य इति संकल्प्य स्पृष्ट्वा श्राद्धमारभ्यद्रव्याणि
प्रोक्ष्य ॐ अद्यात्मसहित कुल शत शिवपुरनयनकामो
रुद्रपदेश्राद्ध महंकरिष्यइति संकल्प्य श्राद्धं पिण्डदानं

वा कुर्यात् ततो विष्णुपदसमीपं गत्वा ॐ अद्यपापक्षय-
कामो विष्णुपददर्शनमहंकरिष्य इतिसंकल्प्य विष्णुपदं
दृष्ट्वा ॐ अद्यपितृमोक्षकामो विष्णुपदस्पर्शनमहंकरिष्य
इतिसंकल्प्य तत्स्पृष्ट्वा तत ॐ अद्यपितृमोक्षकामो
विष्णुपूजनमहंकरिष्य इति संकल्प्यवैष्णावमन्त्रेण पञ्चो
पचारैर्विष्णुं संपूज्य ॐ अद्यात्मसहितकुलसहस्रोद्धरण
पूर्वकविष्णुलोकनयनकामो विष्णुपदेसपिण्डकश्राद्धमहं

कारेष्य इति संकल्प्य पूर्वोक्तरीत्या श्राद्धं कृत्वा तद्धेदिदक्षिणा-
तउपविश्य कव्यवाडोनल इत्युपक्रम्य ऋणात्रयाद्विमुक्तोहमि-
ति प्राङ्मुखः पठेदित्यंतं प्रेतशिलास्थानीयं कर्म कुर्यात् स-
न्यासिनातु विष्णुपदे दंडस्पर्शनं कर्त्तव्यं, दंडं संस्पर्शयेद्धिन्तु-
र्गयांगत्वा न पिंडदः ॥ न्यस्यदंडं विष्णुपदेमुच्यते पितृभिःस
हेति वायुपुराणात् ततः ॐ आत्मसहित कुलशतनरको
द्धरणापूर्वक ब्रह्मलोकनयन कामो ब्रह्मपदेश्राद्धमहंक-

रिष्य इति संकल्प्यश्राद्धं कुर्यात् रुद्रपदवत् ॥ अथद-
क्षिणापदे श्राद्धस्यवाजपेयफलं गार्हपत्यपदेश्राद्धस्यरा-
जसूयफलं आहवनीयपदेश्राद्धस्याश्वमेधफलं सत्यपदे
श्राद्धस्याग्निष्टोमफलं आवसथ्यपदेश्राद्धस्यसोमलोक
फलं इंद्रपदेश्राद्धस्यापितृशक्रलोकप्राप्तिफलं सूर्यपदेश्रा-
द्धस्य पातितपितृसूर्यपुरनयनफलं कार्तिकेयपदेश्राद्ध
स्यापितृशिवलोकनयनफलं अगस्त्यपदे ब्रह्मलोकनयन ४३

फलं क्रौंचपदे पादमेवफलं गणेशचंद्रयोरपि ब्रह्मलोकन-
यनफलं कश्यपपदेश्राद्धस्यापितृब्रह्मलोकनयनफलं श्रा-
द्धोपसंहारस्तुकश्यपपदे कर्त्तव्यः ॥ अथगयाशिरसि, ॐ
अद्यामुकगोत्रस्यामुकशर्मणः स्वर्गप्राप्तिकामो गयाशिर-
सिपिंडदानमहंकरिष्यइतिसंकल्प्य स्वगृह्योक्तविधिना
पिंडं दद्यात् एवंस्त्रीपिंडोपि ततस्तत्रैव ॐ अद्यामुकगोत्रस्या-
मुकशर्मणः मोक्षप्राप्तिकामोगयाशिरसिश्राद्धंपिंडदानं-

वाहकारेभ्य इतिसंकल्प्यावनेजनादि पिंडसमुत्थापनप-
र्यंतं कर्म कुर्यात् एवं स्त्रीपिंडोपिदेयः अत्रच न संबंधादरः
येषांनाम्नेतिसामान्यशब्दस्वरसात् एतच्चापिंडदानंजिव्हा-
लोलमधुश्रवामुंडपृष्ठदक्षिणामानसाभ्यंतरेगदाधरावासादि-
प्रदेशे क्वापिकर्त्तव्यंक्रौंचपदात् फल्गुतीर्थंयावत्साक्षाद्गया-
शिर इतिवचनात् क्रौंचपादस्तुमुंडपृष्ठेपदांकितांप्रेताशि-
लामधिकृत्य वायुपुराणे तांदृष्ट्वासर्वलोकश्चमहापापो-

पपातकी ॥ पूतःकर्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् १
शिलास्थितेषु तोयेषु स्नात्वा कृत्वाथतर्पणं ॥ श्राद्धं स-
पिंडकं येषां ब्रह्मलोकं प्रयांति ते॥ स्थास्यंति च मरि-
ष्यंतियांति ब्रह्मपुरींनराः २ जरायुजा अंडजाश्च देहंत्यक्त्वा-
शिलोपरि॥ गच्छंति विष्णुसायुज्यं कुलैः सप्तशतैः स-
ह ३ ॥ अथपंचतीर्थ्युत्तरपंचमदिनकृत्यम्॥ तत्रानित्याक्रियां-
निर्वर्त्य गदालोलं गत्वा ॐ अद्यपापक्षयाक्षयस्वर्गप्राप्ति-

कामो गदालोले स्नानमहंकरिष्य इति संकल्प्य गदा- ५०
लोले स्नायात् ॐ गदालोलेमहातीर्थेगदाप्रक्षालनेतरे ॥
स्नानंकरोमिशुद्ध्यर्थमक्षयंसुखप्राप्तये १ इतिमंत्रेणमज्जेत्
ततस्तर्पणम् ॐ अद्यपितृब्रह्मलोकनयनकामो गदालोले
श्राद्धं पिंडदानं वाहंकरिष्य इतिसंकल्प्य श्राद्धं पिंडदानं
वा कुर्यात् ततोक्षयवटंगत्वातन्मूलसन्निहित आचा-
रादुत्तरे ॐ अद्यपितृणामक्षयतृप्तिकामोऽक्षयवटेश्राद्ध- ४५

महंकरिष्य इतिसंकल्प्य तत्र श्राद्धं कुर्यात् ततः ॐ
पितृ ब्रह्मलोक नयनकामो ब्रह्मप्रकाशितान्ब्राह्मणानहंभो-
जयिष्य इतिसंकल्प्य तान्त्रीन्भोजयेत् तदलाभेब्राह्म-
णांतरमपि ॐ अद्यकोटिब्राह्मणभोजनजन्यफलसमफ-
लप्राप्तिकामोऽक्षयवटे एकं ब्राह्मणमहं भोजयिष्य इति-
संकल्प्य तत्रैकं ब्राह्मणं भोजयेत् तत ॐ अद्यपितृब्रह्म-
लोकनयनकामोवटेशदर्शनमहं करिष्य इतिसंकल्प्य वटे-

शंप्रतिमारूपंपश्येत् अनेनैवक्रमेण नतिं पूजां च कुर्या-
त् ॐ एकार्णवेवटस्याग्रे यः शेतेयोगनिद्रया ॥ बालरूप-
धरस्तस्मै नमस्तेयोगशायिने ॥ १ ॥ इति मंत्रः ॐ संसार-
वृत्तशस्त्रायाशेषपापक्षयायच ॥ अक्षयब्रह्मदात्रेचनमोऽ
क्षयवटायवै १ इतिमंत्रेणाक्षयवटं नमस्कुर्यात् ॐ पितृरु-
द्रलोकनयनकामः पितामहनतिमहंकरिष्ये इतिसंकल्प्य
कलौमहेश्वरालोकायेनतस्माद्गदाधरः ॥ लिंगरूपोभवत्तं

चवंदेश्रीप्रपितामहं इतिपितामहं नमस्कुर्यात् तथागया-
ग्रामेतत्संमुखप्राग्देशे महानदीस्थितगायत्रीतीर्थे पूर्वदि-
नेकृतोपवासोगायत्रीतीर्थे स्नात्वा प्रातः संध्योपासनंकृत्वा
पिंडदानसहित श्राद्धं कुर्यात् कुलब्राह्मणातानयनं चात्र-
फलंसंध्योपासनस्नाने च स्वतंत्रे द्वयोर्विश्वजितयागात्स्वर्ग
फलं गायत्रीतीर्थं च गयायामध्ये तत्संमुखप्रदेशेमहानद्याः
तथा सावित्र्यापुरतः सरस्वतीतीर्थे स्नात्वा संध्योपासने

कुलशत-वर्गनयनफलं तथा सरस्वत्या अग्रतः प्राच्यां स-
रस्वत्यां स्नात्वा सायंसंध्योपासने कुलसर्वज्ञतानयनफ
लं तथा संध्यात्रयवंदने बहुजन्मकृतसंध्यालोप जनित
पापविनिर्मुक्तिः फलं विशालायां लेलिहासिभरताश्रमे
मुंडपृष्ठे गदाधरसमीपे आकाशगंगायां गिरिकर्णामुखेषु
सप्तसु अन्यतमास्मिन् श्राद्धे पिंडदाने वा कुलशतब्रह्म
लोकफलं तथागोदावर्यां वैतरण्यां च श्राद्धे पिंडदाने वा

प्रत्येकमेकविंशतिकुलोत्तारणफलं वैतरणीचभस्मकूट.
स्थितिदेवनदीपूर्वतः ॥ अत्र च संतरणे आचारप्राप्तोमंत्रः
यासावैतरणीनाम नदीत्रैलोक्यविश्रुता ॥ साच तीर्थाम,
हाभागापितॄणां तारणाय वै १ अत्र च पित्रादिनरकोद्धा,
रणकामनया गोदानमप्याचरंति सप्तकुलोद्धारणकाम-
नया गांरुद्रदैवतां ब्राह्मणे दद्यात् देवानद्यां गोप्रचारे-
मानसे देविकायांपुष्करिण्याघृतकुल्यायां मार्कंडेयके

गदालोले मधुकुल्यायां कोटितीर्थे रुक्मिणीकुंडे एषु
प्रत्येकं पिंडदाने पितृस्वर्गनयनफलं मार्कंडेयेश्वरस्य को
टीश्वरस्य च नमस्कारे प्रप्येकं पितृतारणंफलं पांडशि,
लादर्शने नरकस्थपितृपूतत्वस्वर्गनयनफलं पिंडदाने श्रा-
द्धे च शाश्वतपदप्राप्तिः फलं॥ पांडुशिला चेयंपिताम-
हसमीपस्थचंपकवने घृतकुल्यामधुकुल्यादेविकामहानद्याः
चतस्रः सुंडपृष्ठदक्षिणभागे शिलासंगतामधुश्रवापदवाच्या

भवन्ति तस्यां च स्नाने अश्वमेधायुतं फलं, तर्पणे स-
पिंडकश्राद्धे च सहस्रकुलोद्धारणपूर्वकविष्णुलोकनयनं
फलं, मधुस्रवायां मरणे विष्णुलोकनयनं फलं दशाश्वमे-
धिके हंसतीर्थे च श्राद्धस्य प्रत्येकं शिवपुरगमनं फलं, पि-
तामहदक्षिणे नद्यां दशाश्वमेधः मतंगस्यपदे श्राद्धस्य
कर्तुः ब्रह्मलोकगमनंफलं, मघोकुंडस्नानात्कर्तुर्मुक्तिरेव,
तर्पणात्पितृणांपिंडदानाच्च तेषांमुक्तिफलं, उद्यन्तपर्वत-

समीपेमघोकुंडं रामेश्वरस्यगंगाधरेश्वरस्य च नमस्कारे ५०
३६ प्रत्येक पितृस्वर्गनयनं फलं, गयाकूपेपिंडदानात्तु अश्वमेध-
फलप्राप्तिःफलं अत्रप्रथमवर्षोत्तरंपातितानांपित्रादीनाम-
पिपिंडदानं श्राद्धंप्रवृद्धंचतद्गतस्वर्गकामनयाकर्तव्यं, क्रिय-
तेपतितानांचगतेसंवत्सरेक्वाचित् ॥ देशाधर्मप्रमाणत्वात्-
गयाकूपेषुबंधुभिः १ मार्तंडपदकूपेवाश्राद्धंहरिहरंस्मरन् ॥ ४६
इतिब्रह्मपुराणात् तत्कूपभस्मस्नानेपिपितॄणांनरकतार-

यां फलं, धौतपादेतिल्लीरिण्याःसंगमे पुष्करिणीनामके-
स्नात्वा पित्रादिश्राद्धकरणेविशिष्टएवपित्रादिब्रह्मलोक-
नयनंफलं, सुषुम्नायांश्राद्धस्यसप्तकुलोद्धारःफलं, सुषुम्ना-
गयामध्येवशिष्ठकुंडेस्नात्वावशिष्ठेशनमस्कारेऽश्वमेधतु-
ल्यफलं, गृध्रवटोत्तरेवशिष्ठाश्रमःतत्रवशिष्ठकुंडवशिष्ठेश्वरौ
तथाधेनुकाऽऽरण्येपिंडदानस्यतथाकामधेनुपदेषु पिंडदान-
स्य तथा कामधेनुनमस्कारस्य च प्रत्येकं पितृब्रह्मलो-

52

कनयनं फलं; कर्दमस्थानेगयानाभौ तथामुंडपृष्ठसमीपे
स्नानपूर्वकश्राद्धपितृस्वर्गलोकनयनंफलं, तथा चंडिकान-
मस्कारेपि, तथा फल्वीशस्य चंडीशस्य संगमेशस्य च
नमस्कारे प्रत्येकं पितृस्वर्गनयनंफलं, गयागजोगयादि-
त्योगायत्रीचगदाधरः ॥ गयागयाशिरश्चैवषड्गयामुक्ति-
दायकौ १ एतेषड्गयायांमुक्तिदायकाः पूजायामप्येतदेव फ-
लं तत्प्रकरणात् गयाचमहानदीदेवनदीउदीचीकनखल-

नंदासर्वतीर्थनिरन्तरा गयाशिरश्चनागकूटगृध्रवटोत्तरमा-
नससंगतं गयायां तु वृषोत्सर्गे एकविंशतिकुलोद्धारः
फलं, गयायां यत्रकुत्रचित्प्रदेशे श्राद्धेपिंडदाने च प्रत्येकं
कुलशतस्योद्धरणपूर्वकब्रह्मलोकनयनंफलं, भरताश्रमे म-
हानद्यां स्नात्वा रामेश्वरं रामं सीतां च दृष्ट्वा नत्वा, राम-
राममहाबाहोदेवानामभयंकर॥ नमामित्वामहंदेवममम न-
श्यतुपातकं इतिमंत्रंपठित्वा तत्ररामेश्वरसन्निधानेरामपादे

53

गया. पित्रादिकुलसहितात्मकर्तृकाविष्णुपदगमनकामनया श्राद्धं- पृ०
पृ१ पिंडदानंचकर्तव्यं तदाशिलादक्षिणहस्तेकुंडनामापर्वतः
स्थापितस्तत्रश्राद्धेपिंडदाने च पितृणां ब्रह्म पुरनयनंफलं,
सीतादिदक्षिणे गिरौ मतंगपदे पिंडदानात् पितृस्वर्ग-
नयनंफलं, शिलावामहस्त उद्यंतपर्वतेपिंडदानात् पितृब्र-
ह्मपुरनयनंफलं, तत्रोद्यंतककुंडे मध्यान्हे स्नात्वा सावि
त्रीनामकमध्यान्हसंध्यावंदने कोटिजन्मावच्छिन्नधनाढय पृ१

वेदपारंगविप्रत्वं फलं, ततः स्नात्वाऽगस्त्यपदे पिंडदातुर्दिवौकसपूज्यमानपितृसहितब्रह्मलोकगमनं फलं, ब्रह्मयोनौनिः संकटाविमुक्तिपूर्वकपरब्रह्मलोकगमनकामनयाप्रवेशानिर्गमौकार्यौ गयाकुमारनमस्कारेब्राह्मण्यं फलं, सोमकुंडे स्नानतर्पणपिंडैः पितृसोमनयनं फलं, काकशिलायां काकबलिः कर्त्तुः सद्योमोक्षप्रदः स्वर्गद्वारेश्वरनमस्कारात्स्वर्गः तदुत्तरं ब्रह्मलोकप्राप्तिर्भवति आकाशगंगायां पिं-

 उदानेनस्वनैर्मल्य पितॄस्वर्गनयनं फलं, भस्मकूटपर्वते भ- 
 स्मस्नानस्यस्वर्गप्राप्तिः फलं, कपीशनमस्कारेस्वर्गप्राप्तिःफ-
लं, माहेश्वरीकुण्डेश्राद्धस्यस्वर्गप्राप्तिः फलं, रुक्मिणीकुण्डे-
प्येवमेव, मंगलापूजनेसर्वसौभाग्यं फलं, मात्रीश्वरीकुण्डे-
स्थितां मंगला पूजयेत् ॥ इतिश्रीमहामहोपाध्याय श्रीवाच-
स्पतिविरचिते तीर्थचिंतामणौ गयाप्रयोगः संपूर्णः ॥ शुभम्

॥श्रीगणेशायनमः ॥ अथमातृषोडशीप्रारंभः ॥ आग-
र्भज्ञानपर्य्यन्तं पालितोहं त्वया न्विह ॥ आवाहयामि
त्वां मातः कुशपृष्ठे तिलोदकैः ॥१॥ इति पठित्वा पिण्डं
गृहीत्वा ॐ गर्भोदरे गमने दुःखं विषमे भूमिवर्त्मनि ॥
तस्य निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥२॥ मासि
मासि कृतं कष्टं वेदना प्रसवेषु च ॥ तस्य निष्क्रमणा
र्थाय मातृपिण्डं ददाम्यहम् ॥३॥ संपूर्णे दशमे मासि वर्तते

मातपीडनम् ॥ तस्य निष्क्रमणार्थाय मातृपिंडं ददा- १०
गया म्यहम् ॥४॥ यावत्पुत्रो न भवति तावत् मातुश्च शोच-
५३ नम् ॥ तस्य निष्क्रमणार्थाय मातृपिंडं ददाम्यहम् ॥ ५ ॥
गात्रभंगे भवेन्मातु मृत्युरेव न संशयः ॥ तस्य निष्क्र-
मणार्थाय मातृपिण्डं ददाम्यहम् ॥६॥ शैथिल्येप्रसवे प्राप्ते
माता विंदति दुःखतः ॥ तस्य निष्क्रमणार्थाय मातृपिण्डं
ददाम्यहम् ॥७॥ प्रभाते च गते पुत्रे माता दुःखवती ५३

भवेत् ॥ तस्य निष्क्रमणार्थाय मातृपिंडं ददाम्यहम् ॥ ८ ॥
पिवेच्च कटुद्रव्याणि क्वाथानि विविधानि च ॥ तस्य
निष्क्रमणार्थाय मातृपिण्डंददाम्यहम् ॥ ९ ॥ पद्भ्यां जनयते
पुत्रो जनन्या परिवेदनम् ॥ तस्य निष्क्रमणार्थाय मा-
तृपिण्डं ददाम्यहम् ॥ १० ॥ दिवा रात्रौ यदा माता ददाति
निर्भरस्तनौ ॥ तस्य निष्क्रमणार्थाय मातृपिण्डं ददाम्य-
हम् ॥ ११ ॥ क्षुधया विह्वले पुत्र अन्नं माता प्रयच्छती ॥

56

गया तस्य निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥१२॥ अ- प०
५४ ग्निना शोषयेद्देहं त्रिरात्रौ पोषणेन च॥ तस्य निष्क्-
मणार्थाय मातृपिण्डं ददाम्यहम् ॥१३॥ रात्रौ मूत्रपुरी-
षाभ्या भिद्यते मातृकर्पटौ ॥ तस्य निष्क्रमणार्थाय मा-
तृपिण्डं ददाम्यहम् ॥१४॥ अल्पाहारकृता माता यावत्पु-
त्रोऽस्ति बालकः ॥ तस्य निष्क्रमणार्थाय मातृपिण्डं द-
दाम्यहम ॥१५॥ पुत्रो व्याधिसमायुक्तो माता हा क्रन्द- ५४

कारिणी ॥ तस्य निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम्
॥१६॥ यमद्वारे महाघोरे पथि मातुश्च शोचनम् ॥त-
स्य निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥ १७॥ पिता
माता च भार्या च भगनी दुहिता पतिः॥ पितृष्वसा
मातृभगिनी सप्त गोत्रान्हि तारयेत् ॥ १८ ॥

॥ इति मातृषोडशी समाप्ता ॥



पुत्रो बटुकनाथस्य चोत्पन्नो भार्गवे कुले ॥ ज्ञातौ सारस्वतो मिश्रः काशी-
मध्ये द्विजोत्तमः ॥ १ ॥ नारायण इति ख्यातो भगवच्छरणं गतः ॥ प्रकाशय-
न्ति लोकहेतोः शालग्रामस्य मन्दिरम् ॥ २ ॥



सत्यनाम प्रेस, मैदागिन बनारस सिटी। १८३३।

## ॥ अथ गया जी की बेदी का प्रमाण ॥

| तिथि | संख्या | तिथि | संख्या | तिथि | संख्या | तिथि | संख्या |
|---|---|---|---|---|---|---|---|
| पुनपुना पाँवपूजा | १ | २ कागवली | ७ | गदाधरजी का पंचामृत स्नान | १३ | कागबलि | १९ |
| १५ फाल्गु खीरश्राद्ध | २ | उत्तरमानस | ८ | ३ सरस्वतीस्नान | १४ | ५ रुद्रपद | २० |
| १ ब्रह्मकुण्ड चूर्ण जव पहाड़ २ बेदो ५ | ३ | उदीची | ९ | मतंगवापी | १५ | विष्णुपद खीरश्राद्ध-पांवपूजा | २१ |
| प्रेतशिला | ४ | कनखल | १० | धर्म्मारण्य कूप | १६ | ब्रह्मपद | २२ |
| रामशिला | ५ | दक्षिणमानस | ११ | बोधगया | १७ | ६ कार्तिकपद | २३ |
| रामकुण्ड | ६ | जिह्वालोल | १२ | ४ ब्रह्मसरोबर | १८ | दक्षिणाग्नि | २४ |

| तिथि | संख्या |
|---|---|
| गार्हपत्याग्नि | २५ |
| आहवनीयाग्नि | २६ |
| सूर्यपद | २७ |
| ७ चन्द्रपद | २८ |
| गणेशपद | २९ |
| सभ्याग्निपद | ३० |
| अवसथ्याग्निपद | ३१ |
| दधीचपद | ३२ |
| ८ कण्डवपद | ३३ |

| तिथि | संख्या |
|---|---|
| मातंगपद | ३४ |
| क्रौंचपद | ३५ |
| इन्द्रपद | ३६ |
| अगस्त्यपद | ३७ |
| काश्यपपद | ३८ |
| गजकर्ण पद | ३९ |
| ९ रामगया | ४० |
| सीताकुण्ड | ४१ |
| सौभाग्यदान | ४२ |

| तिथि | संख्या |
|---|---|
| १० गयाशिर | ४३ |
| गयाकूप | ४४ |
| ११ मुण्डपृष्टा | ४५ |
| आदिगया (खोवा-श्राद्ध) | ४६ |
| धौतपद | ४७ |
| १२ भीमगया | ४८ |
| गौप्रचार | ४९ |
| गदालोल दर्शन पवित्रीदान सोना | ५० |

| तिथि | संख्या |
|---|---|
| १३ दूधतर्पणदीप० | ५१ |
| १४ वैतर्णी गोदान पांव पूजा | ५२ |
| २० अक्षयवटखीरशैय्यादान अलंकार सहितमुफल | ५३ |
| गायत्री दही चावल तर्पण वेदो संपूर्ण | ५४ |

आचार्य्य दक्षिणा इति ।

श्रीः

# विज्ञापन ।

॥ श्रीरामकृष्णाभ्यां नमः ॥

श्री काशीनिवासी सारस्वतवंशावतंस मिश्रोपनामक पण्डित नारायण कपुरिये ज्ञातीय जी ने लोकोपकारकरणार्थ तथा विद्धज्जनालोकनार्थ उत्तमोत्तमशैलीवाली श्रीमहामहोपाध्याय वाचस्पतिमिश्र विरचित गयाश्राद्धपद्धती को पं० नारायण राव तिलवन कर को इसके छापने व वेंचने का पूरा अधिकार दिया है ।

पुस्तक मिलने का पता—

पं० नारायण राव तिलवनकर श्रीराम पुस्तकालय,

कचौड़ी गली, बनारस सिटी ।

59

# इति वाचस्पतीय-गयाश्राद्धपद्धतिः ।

मङ्गलाचरण, श्राद्धकाल, त्रिपिण्डी, मातृषोडशीभिर्भूषिता ।

